अन्वयः—दीप्तैरार्चिःप्ररोहैर्दलवति, विष्णोर्बाहुनालेन विधृते, उद्यत्प्रद्योत-नाभं पुरुषं कर्णिकावर्णिकायां प्रथयति । चूडालं वेदमौलिकलयति, चक्रनाम्नो-पलक्ष्येकमले केसरश्रीकराणि अराणि वः स्फारां ( प्रकाशमानां ) श्रियं प्रति-विदधतु ॥ ४९ ॥

प्रकाशमान ज्वालाके अंकुर पुञ्ज जिसके पत्रके सदृश हैं और जो भगवान विष्णुके बाहुरूपी नालमें सम्बद्ध हैं । उदयकालीन सूर्यप्रभा के समान तेजस्वी श्रीसुदर्शन पुरुषमें जो कार्णिकाके आकारमें प्रका-शित होते हैं । शास्त्र शिरोमणि वेदान्त तत्व जिसके परिमलके समान हैं । ऐसे कमल पुष्पके केसरके सदृश सुशोभित श्रीसुदर्शन पुरुषके अर समूह आपको प्रकाशमान लक्ष्मी प्रदान करें ॥ ४९ ॥

धातुस्यन्दैरमन्दैः कलुषितवपुषो निर्झराम्भःप्रपाता-
नर्चिष्मत्या स्वमूर्त्या रथचरणगिरेर्नेमिनाभीतटस्य ।
व्याकुर्वाणारपंक्तिर्वितरतु विभुताविस्तृतिं वित्तकोटी-
कोटीरच्छत्रपीठीकटककरिघटाचामरस्रग्विणीं वः ॥ ५० ॥

अन्वयः—नेमिनाभीतटस्य रथचरणगिरेः अरपंक्तिः अमन्दैः धातुस्यन्दैः कलुषितवपुषोनिर्झराम्भः प्रपातान्; अर्चिष्मत्यास्वमूर्त्याव्याकुर्वाणा; वित्त-कोटीकोटीरछत्रपीठीकटककरिघटाचामरस्रग्विणीं विभुताविस्तृतिं वः वित-रतु ॥ ५० ॥

जिस सुदर्शन रूप पर्वतके नेमि और नाभि, ये दोनों तट जैसे हैं । जिसकी अर पंक्ति बड़े वेग वाले गैरिक धातु प्रवाहके संसर्ग द्वारा रक्तवर्णको प्राप्त हो गये निर्झर जल प्रवाहोंको अपनी प्रदीप्त कान्ति द्वारा जपा पुष्पके सदृश, विस्तृत रूपमें व्यक्त करती हैं । वह आपके लिये कोटि-कोटि द्रव्य-छत्र-दिव्य सिंहासन और सुवर्ण रत्न तथा गजसमूह एवं चमर-माला आदि विविध वैभव राशि वित-रण करे ॥ ५० ॥

॥ इत्यरवर्णनम् ॥

# अथ नाभिवर्णनम्

ऐक्येन द्वादशानामशिशिरमहसां दर्शयन्ती प्रवृत्तिं-
दत्तः स्वर्लोकलक्ष्म्यास्तिलक इव मुखे पद्मरागद्रवेण ।
देयाद्दैतेयदर्पक्षतिकरणरणप्रीणिताम्भोजनाभि-
र्नाभिर्नाभित्वमुर्व्याः सुरपतिविभवस्पर्शि सौदर्शनी वः ॥ ५१ ॥

अन्वयः—द्वादशानामशिशिरमहसाम्, ऐक्येन सञ्जातां प्रवृत्तिंदर्शयन्तीमिव दैतेयदर्पक्षतिकरणरणप्रीणिताम्भोजनाभिः, स्वर्लोक लक्ष्म्याः मुखे पद्मराग द्रवेण दत्तस्तिलक इवस्थिता । सौदर्शनी नाभिः सुरपति विभव स्पर्शि उर्व्याउर्व्याः, नाभित्वं ( नायकत्वं ) वः देयात् ॥ ५१ ॥

जो द्वादश सूर्योंके सम्मिलित तेजकी विचित्र प्रवृत्तिको प्रकाशित करती है अर्थात् जिसके समक्ष बारहों सूर्योंका सम्मिलित प्रकाश भी मलिन हो जाता है । तथा दैत्योंके अभिमानको विनष्ट करनेके लिये प्रधान साधन बनकर जो भगवानको प्रसन्न किया करती है । एवं जो देवलक्ष्मीके दिव्य मुखपर पद्मराग माणिक्यके द्रवरससे किये गये तिलकके समान सुशोभित होती है । वह श्रीसुदर्शन भगवानकी नाभि आपके लिये इन्द्रके विभवको भी हतप्रभ करनेवाला भूमण्डलका साम्राज्य समर्पण करे ॥ ५१ ॥

शस्त्रश्यामे शतांगक्षितिभृति तरलैरुत्तरंगेतुरंगै-
स्त्वंगन्मातंगनक्रे कुपितभटमुखच्छायमुग्धप्रवाले ।
अस्तोकं प्रस्नुवाना प्रतिभटजलधौ पाटवं बाडवस्य-
श्रेयो वः संविधत्तां श्रितदुरितहरा श्रीधरास्त्रस्य नाभिः ॥ ५२ ॥

अन्वयः—शस्त्रश्यामे शताङ्गक्षितिभृतितरलैः तुरङ्गैःउत्तरङ्गे, त्वङ्गन्मातङ्गनक्रे, कुपितभटमुखच्छायमुग्धप्रवाले, प्रतिभटजलधौ, बाडवस्य अस्तोकं पाटवं-प्रस्नुवाना ( दुहाना ) श्रितदुरितहरा, श्रीधरास्त्रस्यनाभिः वः श्रेयः संविधत्ताम् ॥ ५२ ॥

शस्त्र संचार की छटासे श्यामवर्णके प्रतीत होनेवाले शतांग अर्थात् रथ समूह जिसमें पर्वतके सदृश हैं और चञ्चल अश्व समूह लहर जैसे, तथा मत्त गजेन्द्रोंकी घटायें ग्राहोंके सदृश दिखाती हैं। क्रोधाविष्ट शूर वीरोंके मुखकी लालिमा जहां पर प्रवालकी तरह चमकती रहती है। इस प्रकार शत्रुवोंके महा सैन्यरूप समुद्रमें वडवा नलके उत्कट शौर्यको प्रगट करनेवाली तथा अपने आश्रित वर्गके पापों को शमन करने वाली श्रीसुदर्शन भगवानकी पवित्र नाभि आपको कल्याण प्रदान करे॥ ५२ ॥

ज्वालाचूडालकालानलचलनसमाडम्बरा सांपरायं-
यासावासाद्य माद्यत्सुरसुभटभुजास्फोटकोलाहलाढ्यम् ।
दैत्यारण्यं दहन्ती विरचयति यशोभूतिशुभ्रां धरित्रीं-
सा वश्चक्रस्य नक्रस्यदमृदितगजत्रायिणी नाभिरव्यात् ॥ ५३ ॥

अन्वयः—या, असौ नाभिः माद्यत्सुरसुभटभुजास्फोटकोलाहलाढ्यं युद्धमासाद्य ज्वालाचूडालकालानलचलनसमाडम्बरा। दैत्यारण्यं दहन्ती धरित्रीं यशोभूतिशुभ्रां विरचयति नक्रस्यदमृदित गजत्रायिणी सा चक्रस्य नाभिः वः अव्यात् ॥ ५३ ॥

जो मदोन्मत्त देव योद्धाओंकी, भुजाओंकी ताल ध्वनिसे व्याप्त, युद्ध स्थलमें जाकर, प्रलयानलके समान धधकने वाली, अपनी जाज्वल्यमान ज्वाला शिखाओंके द्वारा दैत्य वृन्दरूप जंगलको जलाती हुई, और अपने यशकी विभूति द्वारा, भूमण्डलको शुभ्रवर्णसे अभिषिक्त कर देती है। वह ग्राहसे ग्रस्त गजेन्द्रका परित्राण करनेवाली श्रीचक्रराजकी नाभि आप सबका संरक्षण करे॥ ५३ ॥

विन्दन्ती सांध्यमर्चिर्विदलितवपुषः प्रत्यनीकस्य रक्तैः
स्फायन्नक्षत्रराशिर्दिशि दिशि कणशः कीकसैः कीर्यमाणैः ।
नाकौकःपक्ष्मलाक्षीनवमदहसितच्छायया चन्द्रपादान्-
गाथांगी विस्तृणाना रचयतु कुशलं पिण्डिकायामिनी वः ॥ ५४ ॥

अन्वयः—विदलितवपुषः प्रत्यनीकस्य रक्तैः सान्ध्यम् अर्चिः विन्दन्ती, दिशिदिशिकणशः कीर्यमाणैः कीकसैः ( अस्थिभिः ) स्फायन् (प्रकाशमानः) नक्षत्रराशिः। नाकौकः पक्ष्मलाक्षी नवमदहसितच्छायया चन्द्रपादान् विस्तृणाना राथाङ्गी पिण्डिकायामिनी वः कुशलं रचयतु ॥५४॥

अनेक प्रकारके प्रहारोंसे क्षत विक्षत शरीरवाले शत्रु सैनिकोंसे निकलती हुई रुधिर धाराके द्वारा जो सायं कालीन रक्तिम कान्ति प्रकट किया करती है। तथा प्रत्येक दिशाओंमें बिखरे हुए अस्थि समूह जिसमें तारागणके समान चमकते रहते हैं। देवांगनाओंके अभिनव मदपूर्ण हास्य कान्तिकी धवलिमासे जो चन्द्र किरणोंकी शोभा विखेरती रहती है। एवं भूत रात्रिके स्वरूपको धारण करनेवाली वह श्रीसुदर्शन चक्रकी नाभि आपको सकुशल रखे ॥ ५४ ॥

निःसीमं निस्सृताया भुजधरणिधराघाटतः कैटभारे-
राशाकूलंकषर्द्धेरहितबलमहाम्भोधिमासादयन्त्याः ।
चक्रज्वालापगायाश्चलदरलहरीमालिकादन्तुराया-
विभ्रत्यावर्तभावं भ्रमयतुभुवने पिण्डिका वः प्रशस्तिम् ॥ ५५ ॥

अन्वयः—कैटभारेः भुजधरणिधराघाटतः निस्सीमं निस्सृतायाः आशाकूलं कषर्द्धेः, चलदरलहरीमालिकादन्तुरायाः, अहितबलमहाम्भोधिमासादयन्त्याः चक्रज्वालापगायाः, आवर्तभावं बिभ्रती पिण्डिका वः प्रशस्तिं भुवने भ्रमयतु ॥ ५५ ॥

कैटभ दैत्यको मारने वाले भगवानके पर्वताकार भुज प्रदेशसे जो अगाध रूपमें प्रवाहित होती है और जिसमें दिशारूपी तटोंको तोड़ डालनेकी पूर्ण शक्ति है। जिसमें चंचल अर पंक्ति रूप लहरोंका पूर आया करता है तथा जो शत्रु सैन्यरूप महा समुद्रमें जाकर प्रवेश करती है। इस प्रकार चक्रराजकी ज्वालारूप नदीमें भँवरकी तरह सुशोभित होनेवाली वह श्रीसुदर्शन भगवानकी नाभि आपके यशको विश्वमें विकसित करे ॥ ५५ ॥

पाणौ कृत्वाऽऽहवाग्रे प्रतिभटविजयोपार्जितां वीरलक्ष्मी-
मानीतायास्ततोऽस्याः स्वसविधमसुरद्वेषिणा पूरुषेण ।
प्रासादं वासहेतोर्विरचितमरुणै रश्मिभिः सूचयन्ती-
नाभिर्वो निर्मिमीतां रथचरणपतेर्निर्वृतिं निर्विघाताम् ॥ ५६ ॥

अन्वयः—प्रतिभटविजयोपार्जितां वीरलक्ष्मीं, आहवाग्रे पाणौ कृत्वा स्वसविधम् ( स्वसमीपम् ) आनीतायाः अस्याः ( वीरश्रियः ) वासहेतोः, असुरद्वेषिणा पूरुषेण ( सुदर्शनेन ) अरुणैः रश्मिभिः विरचितं प्रासादं सूचयन्ती रथचरणपतेः, नाभिः वः निर्विघातां निर्वृत्तिं ( आनन्दं ) निर्मिमीताम् ॥ ५६ ॥

विपक्षी योद्धाओं पर विजय प्राप्त कर सम्पादित की हुई वीर लक्ष्मीको युद्ध वेदी पर अपने हस्तगत करके, उसके निवास स्थानके लिये श्रीसुदर्शन पुरुषकी अरुण किरणों द्वारा बने हुए भव्य भवनके समान प्रतीत होने वाली श्रीचक्रराजकी नाभि आप सबके लिये निर्विघ्न आनन्द सम्पादन करे ॥ ५६ ॥

डिण्डीरापाण्डुगण्डैररियुवतिमुखैः पिण्डिका कृष्णहेते-
रुच्चण्डाश्रुप्रवर्षैरुपरततिलकैरुक्तशौण्डीर्यचर्या ।
द्वित्रग्रामाधिपत्यद्रुहिणमदमषीदूषिताक्षक्षमाभृत्-
सेवाहेवाकपाकं शमयतु भवतां कर्म शर्मप्रतीपम् ॥ ५७ ॥

अन्वयः—डिण्डीरापाण्डुगण्डैः उच्चण्डाश्रुप्रवर्षैः, उपरततिलकैः, अरियुवतिमुखैः उक्तशौण्डीर्यचर्या, कृष्णहेतेः पिण्डिका, द्वित्रग्रामाधिपत्यद्रुहिणमदमषीदूषिताक्षक्षमाभृत्, सेवाहेवाकपाकं शर्मप्रतीपं, कर्म, भवतां शमयतु ॥ ५७ ॥

जिनके कपोल शुष्क होकर फेन पिण्डके सदृश श्वेत हो गये हैं तथा निरन्तर अश्रु प्रवाह होनेसे मुखके अलंकार रूप तिलक भी धो उठे हैं। इस प्रकारकी शत्रु वर्गकी स्त्रियों द्वारा प्रशंसित महिमावाली

श्रीकृष्ण चन्द्रकी वह चक्र नाभि, अति स्वल्प दो तीन ग्रामके ही अधिपति होने पर भी अपनेको ब्रह्माण्ड नायक मान बैठे और जिनकी इन्द्रियोंमें कलुषित भाव भर उठे हैं। उन उन्मत्त नरेशोंके शुश्रूषा रूप दुःखदायी कर्मोंको प्रशान्त कर दें ॥ ५७ ॥

पर्याप्तामुन्नतिं याप्रथयति कमलं या तिरोभाव्य भाति-
स्स्रष्टुः सृष्टेर्दवीयः कुवलयमहितं या बिभर्ति स्वरूपम् ।
भूम्ना स्वेनान्तरिक्षं कवलयति च या सा विचित्रा विधत्ताम्-
दैतेयारातिनाभिर्द्रविणपतिपदद्रोहिणीं संपदं वः ॥ ५८ ॥

अन्वयः—या पर्याप्तामुन्नतिं प्रथयति, या कमलं तिरोभाव्य भाति। या स्रष्टुः सृष्टेर्दवीयः कुवलयमहितं स्वरूपं बिभर्ति। या स्वेन भूम्ना अन्तरिक्षं कवलयति। सा विचित्रा दैतेयारातिनाभिः वः द्रविणपतिपदद्रोहिणीं संपदं विधत्ताम् ॥ ५८ ॥

जो पर्याप्त उन्नति प्रकट करती है और अपने उत्कट सौन्दर्यसे कमलकी शोभाको भी तिरस्कृत करके सुशोभित होती है। जो ब्रह्मदेवके ब्रह्मलोकसे अति दूरस्थ भूमण्डल द्वारा प्रशंसित दिव्य आकार धारण करती है तथा अपनी व्यापकतासे आकाशमण्डलको भी माप लेती है। इस प्रकार अति विलक्षण स्वरूप सम्पन्न वह श्रीचक्रेशकी नाभि, कुवेरके वैभवको भी तिरस्कृत करने वाला, विशिष्ट वैभव आपके लिये सम्पन्न करे ॥ ५८ ॥

वाणीवाङ्गैश्चतुर्भिः सदसि सुमनसां द्योतमानस्वरूपा-
वाह्वन्तस्था मुरारेरभिमतमखिलं श्रीरिव स्पर्शयन्ती ।
दुर्गेवोग्राकृतिर्या त्रिभुवनजननस्थेमसंहारधुर्या-
मर्यादालङ्घनं वः क्षपयतु महती हेतिवर्यस्य नाभिः ॥ ५९ ॥

अन्वयः—या चतुर्भिः अङ्गैः वाणीइव सुमनसांसदसि द्योतमानस्वरूपा। या मुरारेः, वाह्वन्तस्था श्रीः इव अखिलम्, अभिमतं स्पर्शयन्ती या दुर्गा-

इव उग्राकृतिः या त्रिभुवनजननस्थेमसंहारधुर्या । सा हेतिवर्यस्य नाभिः वः मर्यादालङ्घनं क्षपयतु ।।५९।।

जो अपने नेमि-अर-नाभि और अक्ष इन चारों अंगोंके साथ एवं परा-पश्यन्ती-मध्यमा तथा वैखरीसे सम्पन्न श्री सरस्वती देवीकी तरह देव स्वरूप विद्वन्मण्डलमें प्रकाश करती है। तथा भगवान्के वक्ष स्थलमें विराजमान श्रीमहालक्ष्मीके सदृश अपने आश्रितोंके लिये अभीष्ट फल वितरण किया करती है। एवं दुर्गादेवीकी भांति जो उग्र स्वरूप वाली है और जिसमें तीनों लोककी उत्पत्ति स्थिति तथा लयकी पूर्ण क्षमता है। वह श्रीचक्रराजकी नाभि आपके वैदिक धर्मकी मर्यादाके अतिक्रामक पापोंको नष्ट कर दे ॥ ५९ ॥

स्रग्भिः संतानजाभिर्मधुरमधुरसस्यन्दसंदोहिनीभिः
पाटीरैः प्रौढचन्द्रातपचयसुषमालोपनैर्लेपनैश्च ।
धूपैः कालागरूणामपि सुरसुदृशो विस्रमर्चासु यस्या-
गन्धं रुन्धन्ति सा वाश्चिरमसुरभिदो नाभिरव्यादभव्यात् ॥ ६० ॥

अन्वयः—सुरसुदृशोयस्या विस्रं ( अशुभगन्धं ) अर्चासु सन्तानजाभिः, मधुरमधुरसस्यन्दसन्दोहनीभिः स्रग्भिः प्रौढचन्द्रातपचयसुषमा लोपनैर्लेपनैः पाटीरैः कालागरूणीं धूपैश्चरुन्धन्ती सा असुरभिदो नाभिः वः चिरम् अभव्यात् अव्यात् ॥ ६० ॥

देवांगनायें जिस नाभिके असुर संहार जन्य मांस शोणितके दुर्गन्धको, पूजार्थ लाये हुए पारिजात पुष्पोंसे बनी हुई तथा मधुर-पराग झरनेवाली सुन्दर मालाओं द्वारा, तथा पूर्ण चन्द्रकी चन्द्रिका जालको लजाने वाले सुरभि चन्दनके लेपसे, एवं कृष्ण अगरु आदि सुगंधित धूपोंसे हटाती हैं। वह दैत्य विनाशक भगवान सुदर्शनकी नाभि, आपकी, जन्म-मरण रूप चिरन्तन अमंगलसे रक्षा करें ॥६०॥

अंहः संहत्यदग्ध्वाप्रतिजनिजनितं प्रौढसंसारवन्या-
दूराध्वन्यानधन्यान्महति विनतिभिर्धामनि स्थापयन्ती ।

विश्रान्तिंशाश्वतीं या नयति रमयतां चक्रराजस्य नाभिः
संयन्मोमुह्यमानत्रिदशरिपुदशासाक्षिणीसाऽक्षिणी वः ॥ ६१ ॥

अन्वयः—या पिण्डिका, विनतिभिः, प्रतिजनिजनितं, अंहः, संहृत्य दग्ध्वा, प्रौढसंसारवन्यादूराध्वन्यान् अधन्यान् महति धामनि स्थापयन्ती । या शाश्वतीं विश्रान्तिं नयति, संयन्मोमुह्यमाना त्रिदशरिपुदशासाक्षिणी वः अक्षिणी रमयताम् ॥६१॥

जो शरणागतोंकी जन्म जन्मार्जित पापराशिको भस्म करके और दुस्तर संसार रूप वनमें चिरकालसे भटकते हुए भक्त पथिकोंको आनन्दरूप श्री वैकुण्ठधाममें पहुंचा कर उन्हें शाश्वत् शान्ति प्रदान करती है । तथा संग्राममें व्यामुग्ध दैत्योंकी दुर्दशाको देखनेसे सुप्रसन्न होनेवाली वह श्रीचक्रराजकी नाभि आपके नेत्रोंको आनन्द प्रदान करे ॥ ६१ ॥

॥ इति नाभिवर्णनम् ॥

## अथाक्षवर्णनम्

श्रुत्वा यन्नाम शब्दं श्रुतिपथकटुकं दवनक्रीडनेषु-
स्वर्वैरिस्वैरवत्यो भयविवशधियः कातरन्यस्तशाराः ।
मन्दाक्षं यान्त्यमन्दं प्रतियुवतिमुखैर्दर्शितोत्प्रासदर्पै-
रक्षं सौदर्शनं तत्क्षपयतु भवतामेधमानां धनायाम् ॥ ६२ ॥

अन्वयः—स्वर्वैरिस्वैरवत्यः, देवनक्रीडनेषु श्रुतिपथकटुकं यन्नामशब्दं श्रुत्वा भयविवशधियः कातरन्यस्तशाराः, दर्शितोत्प्रासदर्पैः प्रतियुवतिमुखैः, अमन्दं मन्दाक्षं ( व्रीडां ) यान्ति । तत् सौदर्शनम् । अक्षं भवताम्, एधमानां धनायां ( वाञ्छाम् ) क्षपयतु ॥६२॥

दैत्य दानवोंकी स्वेच्छाचारिणी स्त्रियां पाशा खेलनेमें कर्ण-कर्कश जिस अक्ष शब्द को सुनकर भयाक्रान्त बुद्धिसे पाशे फेंक देती

हैं। और तब उन्हें देखकर मुसकुराती हुई देवाङ्गनाओं द्वारा वे बहुत लज्जित हो उठती हैं। इस प्रकारका वह श्रीसुदर्शन भगवान् का अक्ष, शब्द आदि विषयोंमें बढ़ी हुई आपकी अनुचित आकांक्षा को प्रशान्त करें ॥ ६२ ॥

व्यस्तस्कन्धं विशीर्णप्रसवपरिकरं प्रस्तपत्रोपमर्दं
संयत्वर्षासु तर्षातुरखगपरिषत्पीतरक्तोदकासु ।
अस्त्रं रक्षस्तरूणामशनिवदशनैरापतन्मूर्ध्नि मूर्ध्नि
स्तादस्त्राधीशितुर्वः स्तबकितयशसे द्विषिणां प्लोषणाय ॥ ६३ ॥

अन्वयः— तर्षातुरखगपरिषत्पीतरक्तोदकासु, संयत्वर्षासु, रक्षस्तरूणां मूर्ध्नि मूर्ध्नि अशनिवत्, व्यस्तस्कन्धं विशीर्णप्रसवपरिकरं प्रस्तपत्रोपमर्दम्, अशनैः आपतत् अस्त्राधीशितुः, अस्त्रं वः स्तबकितयशसे द्विषिणाम्, प्लोषणाय च स्तात् ॥६३॥

अत्यन्त प्याससे आतुर पक्षि वृन्द जिस संग्राम की वर्षामें रक्तका ही जल पीते हैं। वहाँ पर राक्षस रूप वृक्षोंके ऊपर मस्तकों पर बड़े तीव्र वेगसे वज्रके सदृश पड़कर जो शाखा-प्रशाखा आदि अवयवों तथा पुष्प फल रूप गर्भ एवं परिवार और पत्र रूप वाहनोंको विनष्ट कर देता है। वह अतिशीघ्रगामी श्रीसुदर्शन देवका अस्त्र, आप को विकसित कीर्ति देने तथा शत्रु विनाशके लिये सचेष्ट हो ॥ ६३ ॥

दीक्षां संग्रामसत्रे महति कृतवतो दीप्तिभिः संहताभिः
जिह्वाले सप्तजिह्वे दनुजकुलहविर्जुह्वतो नेमिजुह्वा ।
वैकुण्ठास्त्रस्य कुण्डं महदिव विलसत्पिण्डिकावेदिमध्ये
दिश्याद्दिव्यर्द्धिदेश्यं पदमिह भवतामक्षतोन्मेषमक्षम् ॥ ६४ ॥

अन्वयः—महति संग्रामसत्रे दीक्षां कृतवतः संहताभिः दीप्तिभिः जिह्वाले सप्तजिह्वे, दनुजकुलहविः, नेमिजुह्वाजुह्वतः, वैकुण्ठास्त्रस्य पिण्डिकावेदिमध्ये महत्कुण्डमिव विलसत् । अक्षतोन्मेषमक्षं भवताम्, इह, दिव्यर्द्धिदेश्यं पदं दिश्यात् ॥६४॥

महा संग्राम यज्ञमें दीक्षा लेकर, सप्त जिह्वा वाले अपने ज्वाला समूह रूप अग्निमें, जो दानव वंशकी हविको नेमि रूप स्रुक द्वारा आहुति किया करता है । तथा श्रीसुदर्शन राजकी नाभि रूप वेदिका में उत्तम यज्ञ कुण्डकी शोभा प्राप्त करता है । इस प्रकार सर्वदा प्रकाश शील वह श्रीसुदर्शन भगवान्‌का अस्त्र आपके लिये इस लोकमें भी स्वर्गके तुल्य सुखप्रद उत्तम पद प्रदान करे ॥ ६४ ॥

तुंगाद्दोरद्रिशृंगाद्दनुजविजयिनः स्पष्टदानोद्यमानां-
च्छत्रुस्तम्बेरमाणां शिरसिनिपततः स्रस्तमुक्तास्थिपुञ्जे ।
रक्तैरभ्यक्तमूर्तेर्विदलनगलितैर्व्यक्तवीराग्रितर्द्धे-
र्हर्यक्षस्यारिभङ्गं जनयतु जगतामीडितं क्रीडितं वः ॥ ६५ ॥

अन्वयः—दनुजकुलविजयिनः, तुङ्गाद्दोरद्रिशृङ्गात्, स्पष्टदानोद्यमानां, शत्रुस्तम्बेरमाणं, स्रस्तमुक्तास्थिपुञ्जे, शिरसिनिपततः विदलनगलितैः रक्तैः अभ्यक्तमूर्तेः, व्यक्तवीराग्रितर्द्धेः, हर्यक्षस्यजगतामीडितं, क्रीडितं, वः अरि-भङ्गं जनयतु ॥६५॥

दानव वंश विजयी भगवान्‌के उन्मत्त भुजदण्ड रूप पर्वतके शिखरसे निकलकर, मद चूते रहनेवाले जिनके मस्तकसे अस्थि रूप मुक्ता मालायें खिसक पड़ती हैं उन शत्रु रूप मत्त गजेन्द्रोंके शिरपर गिरकर जो उन्हें फाड़ देता है । और तब उनकी रक्त धाराओंसे रंगी हुई अपनी मूर्ति द्वारा वीर शोभा को व्यक्त करता हुआ, समस्त विश्व से वन्द्य श्रीअक्षराज की वीर क्रीड़ा, आपके शत्रु दलका विनाश करे ॥ ६५ ॥

उन्मीलत्पद्मरागं कटकमिव धृतं बाहुना यन्मुरारे-
र्दीप्तान्रश्मीन्दधानं नयनमिव यदुत्तारकं विष्टपस्य ।
चक्रेशार्कस्य यद्वा परिधिरभिदधद्दैत्यहत्यामिव द्रा-
गक्षं पक्षे पतित्वा परिघटयतु वस्तद्दृढिष्ठां प्रतिष्ठाम् ॥ ६६ ॥

अन्वयः—दीप्तान् रश्मीन् दधानं मुरारेर्बाहुना उन्मीलत्पद्मरागंकटकमिवधृतं । यदुत्तारकं विष्टपस्य नयनमिवधृतम् । यद्दैत्यहत्यामभिदधत् । चक्रेशार्कस्य परिधिरिवस्थितम् । तदक्षं पक्षे पतित्वा वः द्रढिष्ठां प्रतिष्ठां परिघटयतु ॥६६॥

जो प्रदीप्त किरणोंको धारण करता हुआ भगवान्‌के हाथों द्वारा प्रकाशमान पद्मराग मणिसे खचित कंकणके समान धारण किया जाता है । तथा संसारके उद्धारक प्रधान उपाय रूपसे स्वीकृत है। जो दैत्य दानवोंकी हिंसाको सुस्पष्ट रूपसे प्रतिपादन करता हुआ चक्र रूप सूर्यकी परिधिकी तरह विराजता रहता है। श्री चक्रेशका वह अक्ष आपका पक्षपाती बन सुस्थायी प्रतिष्ठा अतिशीघ्र सम्पन्न करे ॥ ६६ ॥

क्रीडत्प्राक्क्रोडदंष्ट्राहतिदलितहिरण्याक्षवक्षः कवाट-
प्रादुर्भूतप्रभूतक्षतजसमुदितारुण्यमुद्रं समुद्रम् ।
उन्मीलत्किंशुकाभैरुपहसदमितैरंशुभिः संशयघ्नी-
मक्षं चक्रस्य दत्तामघशतशमनं दाशुषीं शेमुषीं वः ॥ ६७ ॥

अन्वयः—क्रीडत्प्राक्क्रोडदंष्ट्रा हतिदलितहिरण्याक्षवक्षः कवाटप्रादुर्भूतप्रभूतक्षतजसमुदितारुण्यमुद्रंसमुद्रम्, उन्मीलत्किंशुकाभैः, अमितैः, अंशुभिः, उपहसत् । अघशतशमनं, चक्रस्य, अक्षं, दाशुषीं संशयघ्नीं शेमुषीं, वो दत्ताम् ॥६७॥

आदि पुरुष श्री वाराह भगवान्‌के दन्त प्रहारकी क्रीडा द्वारा विदीर्ण हुए हिरण्याक्षके वक्षस्तलसे निकली हुई रुधिर धाराकी लालिमासे रक्तिम वर्णके हो गये समुद्रको खिले हुए पलास पुष्पके समान अपनी असंख्य किरणों द्वारा जो परिहास किया करता है। वह सैकड़ों पापोंको शमन करनेवाला, श्रीचक्रराजका अक्ष आपके लिये दान स्वभाव सम्पन्न तथा संशय दूर करनेवाली विशुद्ध बुद्धि प्रदान करे ॥ ६७ ॥

पद्मोल्लासप्रदं यज्जनयति जगतीमेधमानप्रबोधां
यस्य च्छायासमाना लसति परिसरे रोहिणी तारकाग्र्या ।
नानाहेत्युन्नतत्वं प्रकटयति च यत्प्राप्तकृष्णप्रयाणं-
त्रेधा भिन्नस्य धाम्नः समुदय इव तत्पातु वश्चाक्रमक्षम् ॥ ६८ ॥

अन्वयः—यदक्षं पद्मोल्लासप्रदं जगतीमेधमानप्रबोधां जनयति । यस्य परिसरे तारकाग्र्या रोहिणी छायासमाना लसति । प्राप्तकृष्णप्रयाणं यत् नानाहेत्युन्नतत्वं प्रकटयति । एवं त्रेधाभिन्नस्य धाम्नः समुदयइव स्थितं तत् चाक्रमक्षं वः पातु ॥६८॥

जो श्रीलक्ष्मीजी तथा भक्त वर्गके मानस कमलको प्रफुल्लित एवं जगत्‌की चेतनाको समृद्ध बनाता है। जिसके समीपमें चन्द्रमाकी पत्नी ताराओंमें श्रेष्ठ श्रीरोहिणी छायाके समान हो जाती है। जो श्रीकृष्णके गमनकी सूचना देता है, या जिससे हतप्रभ हो अग्निदेव भी कृष्णवर्त्मा नाम चरितार्थ करते हैं। जो शार्ङ्ग प्रभृति अनेक आयुधों की अपेक्षा अधिक महत्त्वशाली है। इस प्रकार सूर्य, चन्द्र तथा अग्नि में विभक्त तेजका राशिभूत तेजपुंज वह चक्रराजका अक्ष आप सबका रक्षण करे ॥ ६८ ॥

शोचिर्भिः पद्मरागद्रवसमसुषमैः शोभमानावकाशं-
प्रत्यग्राशोकरागप्रतिभटवपुषा भूषितं पूरुषेण ।
अन्तःस्वच्छन्दमग्नोत्थितभृगुतनयं क्षत्रियाणां क्षताना-
मारब्धं शोणितौघैः सर इव भवतो दिव्यहेत्यक्षमव्यात् ॥ ६९ ॥

अन्वयः—पद्मरागद्रवसमसुषमैः शोचिर्भिः, शोभमानावकाशंप्रत्यग्राशोकरागप्रतिभटवपुषा पूरुषेण भूषितं, क्षतानां क्षत्रियाणां शोणितौघैः, आरब्धम्, अन्तःस्वच्छन्दमग्नोत्थितभृगुतनयं सरइव स्थितं दिव्यहेत्यक्षं भवतः अव्यात् ॥६९॥

द्रवीभूत पद्मराग मणिके रसके समान शोभायमान किरणों द्वारा रक्तवर्णकी शोभासे सम्पन्न मध्य प्रदेश वाला तथा प्रफुल्ल अशोक पुष्पके रंगको हतप्रभ कर देनेवाले रक्त विग्रहधारी श्री सुदर्शन पुरुष से जो विभूषित रहता है। तथा युद्धमें काटे गये क्षत्रियोंके रक्त प्रवाह से परिपूर्ण, वह सरोवर जिसमें स्नानके अनन्तर श्रीपरशुरामजी उठ रहे हों, उसके सदृश प्रतीत होनेवाला वह श्रीसुदर्शनजीका अक्ष आप सबकी रक्षा करे ॥ ६९ ॥

मत्तानामिन्द्रियाणां कृतविषयमहाकाननक्रीडनानां-
सृष्टं चक्रेश्वरेण ग्रहणधिषणया वारिवद्वारणानाम् ।
गम्भीरं यन्त्रगर्तं कमपि कृतधियो मन्वते यत्तदेया-
दस्थूलां संविदं वस्त्रिजगदभिमतस्थूललक्षं तदक्षम् ॥ ७० ॥

अन्वयः—कृतधियो यदक्षंकृतविषयमहाकाननक्रीडनानां मत्तानां वारणानाम्, इव इन्द्रियाणां ग्रहणधिषणया चक्रेश्वरेण वारिवत् सृष्टम् गम्भीरं कमपियन्त्रगर्तं मन्वते त्रिजगदभिमतः स्थूललक्षं तदक्षं वः अस्थूलां संविदं प्रदेयात् ॥७०॥

विवेक सम्पन्न ज्ञानी लोग, जिसे विषयवासनाके जङ्गलमें विहार करनेवाले मत्त गजेन्द्रके सदृश इन्द्रिय वर्गके नियमन करनेके लिये, श्रीचक्रराज द्वारा निर्मित गजबन्धक गर्तके रूपमें एक गम्भीर यन्त्रगर्त समझते हैं। तथा तीनों लोककी अभीष्ट वस्तु प्रदान करनेमें जो समर्थ हैं। वह श्रीसुदर्शन भगवान्का अक्ष आपके लिये विवेक वाली सूक्ष्म प्रतिभा प्रदान करे ॥ ७० ॥

प्राणादीन्संनियम्य प्रणिहितमनसां योगिनामन्तरङ्ग-
तुङ्गं संकोच्य रूपं विरचितदहराकाशकृच्छ्रासिकेन ।
प्राप्तं यत्पूरुषेण स्वमहिमसदृशं धाम कामप्रदं वो-
भूयात्तद्भूर्भुवः स्वस्त्रयवरिवसितं पुष्कराक्षायुधाक्षम् ॥ ७१ ॥

अन्वयः—प्राणादीन्संनियम्य प्रणिहितमनसां योगिनामन्तरङ्गे तुङ्गं रूपं संकोच्य विरचितदहराकाशकृच्छ्रासिकेन पूरुषेण स्वमहिमसदृशं धाम यस्मात्तम् । भूर्भुवः स्वस्त्रयवरिवसितं पुष्करक्षायुधाक्षं वः कामप्रदं भूयात् ॥७१॥

योग आदिकी पद्धतिसे, प्राण आदि वायुका नियन्त्रण कर समाहित मनवाले योगियोंके अन्तःकरणमें विराजनेके लिये जिन्हें अपना विराट् स्वरूप संकुचित कर लेना पड़ता है। अतः वे ही सुदर्शन भगवान् अपने स्वरूपानुकूल जिस अक्षको अपना अधिष्ठान बनाये हैं और जो भूः भुवः तथा स्वः इन तीनों लोकोंसे अभिवन्दित होता है वह श्रीचक्रराजका अक्ष आपकी कामना सफल करे ॥ ७१ ॥

विद्वान्वीध्रेण धाम्ना चरणनखभुवा बद्धवासस्य मध्ये-
चक्राध्यक्षस्य बिभ्रत्परिहसितजपापुष्पकोशान्प्रकाशान् ।
शुभ्रैरभ्रैरदभ्रैः शरदि तत इतो व्योम विभ्राजमानं-
प्रातस्त्यादित्यरोचिस्ततमिव भवतः पातु रथांगमक्षम् ॥ ७२ ॥

अन्वयः—मध्ये बद्धवासस्य चक्राध्यक्षस्य चरणनखभुवा वीध्रेण धाम्ना विद्वान्, परिहसितजपापुष्पकोशान् प्रकाशान् बिभ्रत् । शुभ्रैः, अदभ्रैः अभ्रैः शरदि इतस्ततो विद्धम् । प्रातस्त्यादित्यरोचिस्ततम् विभ्राजमानं व्योम इव स्थितं राथाङ्गं अक्षं भवतः पातु ॥ ७२ ॥

श्रीचक्रराजके मध्य प्रदेशमें विराजमान एवं श्रीसुदर्शन पुरुषके चरण नखसे निकलनेवाली निर्मल कान्ति द्वारा जो सर्वदा सुशोभित रहता है। तथा जपा पुष्पके सौन्दर्यको तिरस्कृत करके उत्तम प्रकाश धारण करता हुआ, शुभ्र वर्णकी विविध मेघमालाओंसे संयुक्त और प्रातःकालीन सूर्यकी किरणोंसे व्याप्त होकर जो चमकते हुए आकाशके सदृश प्रतीत हुआ करता है वह श्रीसुदर्शन भगवान्का अक्ष आपकी रक्षा करे ॥ ७२ ॥

श्रीवाणीवाङ्मृडान्यो विदधति भजनं शक्तयो यस्य दिक्षु
प्राह व्यूहं यदाद्यं प्रथममपि गुणं भारती पाञ्चरात्री ।

घोरां शान्तां च मूर्तिं प्रथयति पुरुषः प्राक्तनः प्रार्थनाभि-
र्भक्तानां यस्य मध्ये दिशतु तदनघामक्षमध्यक्षतां वः ॥ ७३ ॥

अन्वयः—पाञ्चरात्री भारती यदाद्यं व्यूहं (वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपम्) प्रथमं गुणं (ज्ञानम्) अपि प्राह । श्रीवाणीवाङ्मृडान्यो यस्य शक्तयः, दिक्षु भजनं विदधति । यस्याक्षस्य मध्ये स्थितः, प्राक्तनः पुरुषः भक्तानां प्रार्थनाभिः घोरां शान्तां च मूर्तिं प्रथयति । तदक्षं वा, अनघामध्यक्षतां दिशतु ॥ ७३ ॥

पाञ्चरात्र शास्त्र जिसको वासुदेव, सङ्कर्षण प्रद्युम्न और अनिरुद्ध स्वरूप बतलाता है एवं ज्ञान गुण प्रधान प्रतिपादन करता है। भगवान्‌के आदि व्यूहरूप वासुदेव आदिकी क्रमशः श्री वाणी वाक् और मृडानी ये चार शक्तियां चारों दिशाओंमें जिस व्यूहात्मक अक्षकी सेवा किया करती हैं। तथा जिसके मध्यमें विराजमान होकर श्री सुदर्शन भगवान् भक्तोंकी प्रार्थनाओं द्वारा सुप्रसन्न हो प्रसंगानुकूल उनके लिये उग्र और प्रसन्न विग्रह धारण कर अभीष्ट पूर्ण किया करते हैं। वह भगवान्‌का अक्ष आपको दोषरहित आधिपत्य पद प्रदान करे ॥ ७३ ॥

रक्षः पक्षेण रक्षत्क्षतममरगणं लक्ष्यवैलक्ष्यमाजौ-
लक्ष्मीमक्षीयमाणां बलमथनभुजे वज्रशिक्षानपेक्षे ।
निक्षिप्य क्षिप्रमध्यक्षयति जगति यद्दक्षतां दिव्यहेते-
रक्षामामक्षमां तां क्षपयतु भवतामक्षजिल्लक्ष्यमक्षम् ॥ ७४ ॥

अन्वयः—यदक्षं आजौ ( रक्षःपक्षेणक्षतं लक्ष्यवैलक्ष्य अमरगणं रक्षत् । वज्रशिक्षानपेक्षे बलमथनभुजे, अक्षीयमाणां लक्ष्मीं क्षिप्रं निक्षिप्य जगति दक्षतामध्यक्षयति । अक्षजिल्लक्ष्यं दिव्यहेतेस्तदक्षं भवताम्, अक्षामां, ताम्, अक्षमां क्षपयतु ॥ ७४ ॥

समरांगणमें राक्षसोंके सैन्यसे पराजित हो जानेके कारण सलज्ज देव गणकी जो रक्षा किया करता है। तथा वज्र संचालनकी कलासे अनभिज्ञ देवेन्द्रके भुजदण्डोंमें अति शीघ्रतासे अपरिमित ऐश्वर्य डालकर लोकमें जो अपने अद्भुत सामर्थ्यका प्रकाशन किया करता है। एवं संयम नियमशील पुरुषोंके ध्यानका जो एक मात्र लक्ष्य है। वह दिव्य अक्ष आपकी बड़ीसे बड़ी अशान्तिको विनष्ट करे ॥ ७४ ॥

॥ इत्यक्षवर्णनम् ॥

---

## अथ सुदर्शनपुरुषवर्णनम्

ज्योतिश्चूडालमौलिस्त्रिनयनवदनः षोडशोत्तुङ्गबाहुः
प्रत्यालीढेन तिष्ठन्प्रणवशशधराधारषट्कोणवर्ती ।
निःसीमेन स्वधाम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणो-
भूयात्सौदर्शनो वः प्रतिभटपरुषः पूरुषः पौरुषाय ॥ ७५ ॥

अन्वयः—ज्योतिश्चूडालमौलिः त्रिनयनवदनः षोडशोत्तुङ्गबाहुः प्रत्यालीढेन ( दर्शनीयतया ) तिष्ठन् प्रणवशशधराधारषट्कोणवर्ती । निस्सीमेन स्वधाम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणः प्रतिभटपरुषः सौदर्शनः, पूरुषः वः, पौरुषाय भूयात् ॥ ७५ ॥

जिसका मस्तक ज्वालारूप जटाओंसे सुशोभित रहा करता है तथा जिसके तीन नेत्र और सोलह विशाल भुजायें हैं। जो अति दर्शनीय मुद्रामें विराजता हुआ प्रणव और चन्द्रमाको आधार बनानेवाले षट्कोणमें निवास करता है। एवं अपने असीम प्रतापसे जगतका कल्याण सम्पादन करता हुआ शत्रुवर्गके प्रति अति भयंकर हो जाया करता है। वह सुदर्शन चक्र मध्यवर्ती दिव्य पुरुष आपको पुरुषत्व प्रदान करे ॥ ७५ ॥

वाणी पौराणिकी यं प्रथयति महितं प्रेक्षणं कैटभारेः-
शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम् ।
कर्तुं यत्तत्त्वबोधो न निशितमतिभिर्नारदाद्यैश्च शक्यो-
दैवीं वो मानुषीं च क्षिपतु स विपदं दुस्तरामस्त्रराजः ॥ ७६ ॥

अन्वयः—पौराणिकी वाणी यं पुरुषं कैटभारेः महितं प्रेक्षणं प्रथयति यस्य शक्तिः तद्विभूत्याम्, इषुदंष्ट्रानखपरशुमुखव्यापिनी भवति । यत्तत्त्व-बोधः निशितमतिभिः नारदाद्यैश्च कर्तुं न शक्यः । स अस्त्रराज, वः दुस्तरां दैवीं मानुषीं च विपदं क्षिपतु ॥ ७६ ॥

वेद एवं पुराण आदि जिसे भगवानका प्रशस्य संकल्प स्वरूप प्रतिपादन करते हैं । तथा जिसकी शक्ति भगवानके राम वाराह नृसिंह परशुराम आदि विभव रूपोंके इषु-दंष्ट्रा नख और परशु प्रभृति आयुधोंमें व्याप्त है । एवं जिसके तात्विक स्वरूपको सूक्ष्म बुद्धि वाले नारद प्रभृति महर्षि गण भी नहीं जान पाते । वह श्रीसुदर्शन पुरुष आपकी दुस्तर दैवी तथा मानुषी आपत्तियोंको नष्ट करें ॥ ७६ ॥

रूढस्तारालवाले रुचिरदलचयः श्यामलैः शस्त्रजालै-
र्ज्वालाभिः सप्रवालः प्रकटितकुसुमो बद्धसंघैः स्फुलिंगैः ।
प्राप्तानां पादमूलं प्रकृतिमधुरया छायया तापहृद्वो-
दत्तामुद्दोः प्रकाण्डः फलमभिलषितं विष्णुसंकल्पवृक्षः ॥ ७७ ॥

अन्वयः—तारालवालेरूढः श्यामलैः शस्त्रजालैः रुचिरदलचयः ज्वालाभिः सप्रवालः बद्धसंघैः स्फुलिङ्गैः प्रकटितकुसुमः, उद्यो ऽप्रकाण्डः । पादमूलं प्राप्तानां प्रकृतिमधुरया छायया तापहृत्विष्णुसंकल्पवृक्षः वः, अभिलषितं फलं दत्ताम् ॥ ७७ ॥

जो प्रणवरूप क्यारीमें प्रकट हुआ है तथा कुन्त-कृपाण आदि शस्त्र समूह उसके सुन्दर सुन्दर पत्ते और रक्तवर्णकी ज्वालायें कोमल २ किसलय ( कलिे ) हैं । अग्निके स्फुलिंग जिसके पुष्प एवं उच्च

भुजदण्ड ही स्कन्ध हैं। जो अपने चरणके आश्रित प्राणियोंके तापको अपनी स्वाभाविक मधुर छाया द्वारा प्रशान्त करता रहता है। इस प्रकार भगवान विष्णुका संकल्प स्वरूप वह श्रीसुदर्शनरूप वृक्ष आप के लिये अभीष्ट अमृतमय फल प्रदान करे ॥ ७७ ॥

धाम्नामैरम्मदानां निचयमिव चिरस्थायिनां द्वादशानां-
मार्तण्डानां समूहं मह इव बहुलां रत्नभासामिवर्द्धिम् ।
अर्चिस्संघातमेकीकृतमिव शिखिनां वाडवाग्रेसराणाम्
शंकन्ते यस्य रूपं स भवतु भवतां तेजसे चक्रराजः ॥ ७८ ॥

अन्वयः—यस्य रूपं चिरस्थायिनाम्, ऐरम्मदानां धाम्नां निचयमिव द्वादशानां मार्तण्डानां महस्समूहमिव, रत्नभासां बहुलाम्, ऋद्धिमिव, वाडवाग्रेसराणाम्, शिखिनाम्, एकीकृतमर्चिस्संघातमिव, ( द्रष्टारःशंकन्ते ) सचक्र राजः भवतां तेजसे भवतु ॥ ७८ ॥

जिसके स्वरूपके विषयमें दर्शक गण यह विकल्प किया करते हैं कि क्या? यह अधिक कालतक स्थिर रहने वाली विद्युत्का तेज पुञ्ज है? अथवा द्वादश सूर्योंका एकत्रित तेज समूह है? या रत्न प्रभाओं की अति विशिष्ट समृद्धि है? अथवा बड़वानलकी भी अपेक्षा अधिक तेजस्वी अग्नि ज्वालाओंका सामूहिक तेज पुञ्ज है? इस तरहके अनेक विकल्पोंका विषय वह चक्रराज सुदर्शन सर्वत्र आपके तेजका विस्तार करे ॥ ७८ ॥

उग्रंपश्याक्षमुद्यद्भ्रुकुटि समुकुटं कुण्डलिस्पष्टदंष्ट्र-
चण्डास्त्रैर्बाहुदण्डैर्लसदनलसमक्षौमलक्ष्योरुकाण्डम् ।
प्रत्यालीढस्थपादं प्रथयतु भवतां पालनव्यग्रमग्रे-
चक्रेशोऽकालकालेरितभटविकटाटोपलोपाय रूपम् ॥ ७९ ॥

अन्वयः—चक्रेशः उग्रं पश्याक्षम्, उद्यद् भ्रुकुटि, समुकुटं कुण्डलि स्पष्टदंष्ट्रं चण्डास्त्रैर्बाहुदण्डैर्लसत् । अनलसमक्षौमलक्ष्योरु काण्डम् प्रत्यालीढं

स्थपादं, पालनव्यग्ररूपम्, अकालकालेरितभटविकटाटोपलोपाय भवताम् अग्रे प्रथयतु ॥ ७९ ॥

जिनके नेत्र अत्यन्त भयंकर तथा भ्रुकुटि अतीव उग्र हैं। मुकुट और कुण्डल धारण किये रहते हैं। बड़े २ दांत हैं और भुजदण्डोंमें प्रलय मचादेनेवाले अस्त्र सर्वदा धारण किये रहते हैं। जो ऊरुभाग तक अग्निज्वालाके सदृश धौतवस्त्र पहने हुए अपने आसन पर एक विलक्षण ढंगसे बैठकर जगत्की रक्षाके लिये सतर्क रहा करते हैं। ऐसे श्री चक्रराज सुदर्शन अकालमें प्रेरित यमराजके दूतोंके गर्वको विनष्ट करनेकेलिये अपने उक्त दिव्य स्वरूपको आपके समक्ष प्रकट करें ॥ ७९ ॥

चक्रं कुन्तं कृपाणं परशुहुतवहावंकुशं दण्डशक्ती-
शंखं कोदण्डपाशौ हलमुसलगदावज्रशूलांश्च हेतीन् ।
दोर्भिः सव्यापसव्यैर्दधदतुलबलस्तम्भितारातिदर्पै-
र्व्यूहस्तेजोभिमानी नरकविजयिनो जृम्भतां संपदे वः ॥ ८० ॥

अन्वयः—नरकविजयिनस्तेजोभिमानीव्यूहः (अवतारविशेषः) अतुलबलस्तम्भितारातिदर्पैः, सव्यापसव्यदोर्भिः, चक्रं कुन्तं कृपाणं परशुहुतवहौ, अंकुशं दण्डशक्ती शंखं कोदण्डपाशौ, हलमुसलगदावज्रशूलाश्चहेतीन् दधत् वः सम्पदे जृम्भताम् ॥ ८० ॥

नरकासुर विजयी भगवान्के तेजके विशिष्ट व्यूह (अवतार) अपने असीम बलसे शत्रुवर्गके दर्पको विनष्ट कर देने वाले अपने दक्षिण और वाम सोलहो हाथोंमें क्रमशः चक्र-कुन्त-कृपाण-परशु-अग्निबाण-अंकुश-दण्ड-शक्ति-शंख-धनुष-पाश-हल-मुसल-गदा-वज्र और शूल नामक आयुधोंको धारण करते हुए भगवान श्रीसुदर्शन पुरुष आपको सम्पत्ति प्रदान करनेके लिये अभिव्यक्त हों ॥ ८० ॥

पीतं केशे रिपोरप्यसृजि रथपदे संश्रितेऽप्युत्कटाक्षं-
चन्द्राधःकारि यन्त्रे वपुषि च दलने मण्डले च स्वराङ्कम् ।

हस्ते वक्त्रे च हेतिस्तवकितमसमं लोचने मोचने च-
स्तादस्तोकाय धाम्ने सुरवरपरिषत्सेवितं दैवतं वः ॥ ८१ ॥

अन्वयः—रिपोरप्यसृजि केशे च पीतं रथपदेसंश्रिते ऽप्युत्कटाक्षं, यन्त्रे वपुषिच चन्द्राधःकारि, दलने मण्डले च स्वराङ्कम् हस्तेवक्रे च हेतिस्तवकितं लोचने मोचने च असमम्, सुरवरपरिषत्सेवितं दैवतं वः स्तोकाय धाम्ने स्तात् । ८१ ॥

केश और शत्रु शोणितके विषयमें जिनमें पीत गुण है, अर्थात् केश पीतवर्णके और शत्रु शोणित भी पी लेते हैं। रथ चरण और संश्रित व्यक्तिके विषयमें जिनके अक्ष ( नेत्र ) अति उत्कट और उदार हैं। जिनके यन्त्र और शरीरसे चन्द्रमा भी तिरस्कृत रहता है। तथा जिनके शत्रु दलन और मण्डलमें स्वर ( निर्घोष ) एवं प्रणवका अङ्क है। जिनके हस्त और मुखमें आयुधों तथा ज्वालाओंके स्तबक ( गुच्छे ) हैं और नेत्र तथा शत्रुमोचन असमान हैं। इस प्रकार देव गणसे सुसेवित श्रीसुदर्शन पुरुष आपको प्रकृष्ट तेज प्रदान करें ॥८१॥

चित्राकारैः स्वचारैर्मितसकलजगज्जागरूकप्रतापो-
मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान् ।
पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानाम्-
लक्ष्मीं राजासनस्थोवितरतु भवतां पूरुषश्चक्रवर्ती ॥ ८२ ॥

अन्वयः—चित्राकारैः स्वचारैः, मितसकलजगज्जागरूकप्रतापः, तन्त्रानुरूपं मन्त्रं मनसि कलयतः, आत्मगुह्यान् मानयन् पंचाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः, षण्णां गुणानां धाम राजासनस्थः चक्रवर्ती पूरुषः, भवतां लक्ष्मीं वितरतु ॥ ८२ ॥

जो अपने विविध स्वरूपके परिभ्रमण द्वारा समस्त ब्रह्माण्डको माप लिये हैं। जिनका प्रताप देदीप्यमान है। पाञ्चरात्र तन्त्रके अनुसार सुदर्शनके मन्त्रको अपने हृदयमें संकलन करते हुए एवं अपने

रहस्यसे अपने भक्त वर्गको सम्मानित करते हुए, जो अपने पञ्चांग न्यास सम्पत्ति द्वारा शत्रु दलपर विजय प्राप्त किया करते हैं। जो ज्ञान-शक्ति आदि षट्गुणोंके अधिष्ठान हैं। ऐसे चन्द्रमण्डलके सिंहासन पर विराजमान चक्रवर्ती श्रीसुदर्शन राज आपके लिये लक्ष्मी वितरण करें॥ ८२ ॥

अक्षावृत्ताभ्रमालान्यरविवरलुठच्चन्द्रचण्डद्युतीनि-
ज्वालाजालावलीढस्फुटदुडुपटलीपाण्डुदिङ्मण्डलानि ।
चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालार्तशेषा-
ण्यस्त्रग्रामाग्रिमस्य प्रददतु भवतां प्रार्थितं प्रस्थितानि ॥ ८३ ॥

अन्वयः—अक्षावृत्ताभ्रमालानि, अरविवरलुठच्चन्द्रचण्डद्युतीनि, ज्वालाजालावलीढस्फुटदुडुपटलीपांडुदिङ्मण्डलानि, चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालार्त.शेषाणि, अस्त्रग्रामाग्रिमस्य प्रस्थितानि भवतां प्रार्थितं प्रददतु ॥ ८३ ॥

जिसके अक्षमें मेघ मालायें इधर उधर बार बार आवर्तन किया करती हैं। तथा अरोंके मध्य प्रदेशमें चन्द्र और सूर्य लुण्टन करते रहते हैं। एवं जिसके ज्वाला समूहसे हतप्रभ, और छिन्न-भिन्न, नक्षत्र मण्डलकी कान्तिसे दिशायें धवल वर्णकी प्रतीत हुआ करती हैं। इसी प्रकार जिनके प्रयाण कालमें चक्रकी नेमि द्वारा लोकालोक पर्वत के आक्रान्त हो जानेसे भूमण्डल कम्पित होने लगता तथा शेषको भी वेदनाका अनुभव होने लगता है। एवंभूत अस्त्रसमूहशिरोमणि चक्रराज श्री सुदर्शन भगवान्के प्रयाण आपको अभिलषित अर्थ प्रदान करें॥ ८३ ॥

शूलं त्यक्तात्मशीलं सृणिरणुकघृणिः पट्टसः स्पष्टसादः
शक्तिः शालीनशक्तिः कुलिशमकुशलं कुण्ठधारः कुठारः ।
दण्डश्चण्डत्वशून्यो भवति तनु धनुर्यत्पुरस्तात्स वः स्ताद्-
ग्रस्ताशेषास्त्रगर्वो रथचरणपतिः कर्मणे शर्मणाय ॥ ८४ ॥

अन्वयः—यत्पुरस्तात् शूलं त्यक्तात्मशीलं भवति, सृणिः, अणुकघृणिः, पट्टसः स्पष्टसादः शक्तिः शालीनशक्तिः, ( अधृष्टशक्तिः ) कुलिशम्, अकुशलम्, कुठारः, कुण्ठधारः, दण्डः चण्डत्वशून्यः, धनुस्तनुर्भवति ग्रस्ताशेषास्त्रगर्वः, सरथचरणपतिः, वः शार्मणाय कर्मणे स्तात् ॥ ८४ ॥

जिन दिव्य पुरुषके समक्ष शङ्करका शूल शत्रु विनाशकी प्रवीणता रूप अपने स्वभावको त्याग देता है। एवं इसी प्रकार अग्निदेवके अंकुशकी किरणें विनष्ट और वायु देवका पट्टस नामक आयुध भी छिन्न-भिन्न हो जाता है। श्रीकार्तिकेयकी शक्तिका धैर्य समाप्त और इन्द्रके वज्रकी भी कुशलता अस्तंगत हो उठती है। गणेशका कुठार कुण्ठधार, तथा यमदण्ड भी अपनी क्रूरतासे रहित, और रुद्रका धनुष भी क्षीण हो जाया करता है। इस तरह सभी अस्त्रोंके गर्वको खण्डित करनेवाले श्रीचक्रराज सुदर्शन पुरुष आपके कल्याणकारक कार्यमें सर्वदा सतर्क रहें ॥ ८४ ॥

क्षुण्णाजानेयवृन्दं क्षुभितरथगणं सन्नसान्नाय्ययूथम्-
क्ष्वेलासंरम्भहेलाकलकलविगलत्पूर्वगीर्वाणगर्वम् ।
कुर्वाणः सांपरायं रथचरणपतिः स्थेयसीं वः प्रशस्ति-
दुग्धां दुग्धाब्धिभासं भयविवशशुनासीरनासीरवर्ती ॥ ८५ ॥

अन्वयः—भयविवशशुनासीरनासीरवर्ती, क्षुण्णाजानेयवृन्दंक्षुभितरथगणं सन्नसान्नाय्ययूथम्, क्ष्वेलासंरम्भहेलाकलकलविगगलत्पूर्वगीर्वाणगर्वम्, साम्परायं कुर्वाणः रथचरणपतिः स्थेयसीं दुग्धाब्धिभासं वः प्रशस्तिं दुग्धाम् ॥ ८५ ॥

जो भयाक्रान्त इन्द्रके विजयार्थ सेनापतिका पद ग्रहण करते हैं तथा जिस युद्धमें अच्छे २ घोड़े चूर्ण विचूर्ण हो जाते, और रथपंक्तिया जर्जरित हो जातीं, एवं बड़े २ मत्तगजेन्द्र, तहस नहस हो जाया करते हैं। जहां पर विजय निमित्तक हर्षके कोलाहलकी क्रीड़ामें दैत्य वर्ग का गर्व खण्डित एवं विलीन हो जाता है। ऐसे भयंकर युद्धको करने

वाले श्रीचक्रराज सुदर्शन पुरुष आपको क्षीर समुद्रके सदृश धवल एवं सुस्थिर कीर्तिसे परिपूर्ण करें ॥ ८५ ॥

द्रुह्यद्दोःशालिमालिप्रहरणरभसोत्तानिते वैनतेये-
विद्राति द्राक्प्रयुक्तः प्रधनभुवि परावर्तमानेन भर्त्रा ।
निर्जित्य प्रत्यनीकं निरवधिकचरद्धास्तिकाश्वीयरथ्यं-
पथ्यं विश्वस्य दाश्वान्प्रथयतु भवतो हेतिरिन्द्रानुजस्य ॥ ८६ ॥

अन्वयः—द्रुह्यद्दोःशालिमालिप्रहरणरभसोत्तानितेवैनतेये, द्राक् विद्राति ( पलायमानेप्रधावतिसति ) प्रधनभुविपरावर्तमानेन भर्त्रा प्रयुक्तः, निरवधिकचरद्धास्तिकाश्वीरथ्यंप्रत्यनीकं निर्जित्य विश्वस्य पथ्यं दाश्वान् । इन्द्रानुजस्यहेतिः भवतः प्रथयतु ॥ ८६ ॥

शत्रु संहारमें विलक्षण सामर्थ्य वाले भुजदण्डोंसे सम्पन्न माली नामक दैत्यके गदा आदिके प्रहारसे जर्जरित होने पर जब गरुड़जी अतिशीघ्र रण स्थलसे विमुख होने लगे, तो भगवान फिर उन्हें लौटा कर और जिन श्रीसुदर्शन पुरुषको नियुक्त कर उनके द्वारा असंख्य हाथी घोड़े तथा रथों से व्याप्त शत्रु सैन्यपर विजय दिलाये एवं विश्व का कल्याण किये हैं । वे चक्राधीश श्री सुदर्शन राज आपको प्रख्यात करें ॥ ८६ ॥

नन्दिन्यानन्दशून्ये गलति गणपतौ व्याकुले बाहुलेये-
चण्डे चाकित्यकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम् ।
उच्छिद्याजौ बलिष्ठं बलिजभुजवनं यो ददावादिभिक्षो-
र्भिक्षां तत्प्राणरूपां स भवदकुशलं कृष्णहेतिः क्षिणोतु ॥ ८७ ॥

अन्वयः—आजौ नन्दिन्यानन्दशून्ये, गणपतौ गलति, बाहुलेये व्याकुलेसति, चण्डे चाकित्यकुण्ठे, प्रमथपरिषदिप्रमाथं प्राप्तवत्यां, बलिष्ठं बलिजभुजवनम्, उच्छिद्य आदिभिक्षोः ( शिवस्य ) तत्प्राणरूपां भिक्षां यः प्रददौ सः कृष्णहेतिः भवदकुशलं क्षिणोतु ॥ ८७ ॥

जो युद्धमें नन्दीश्वरको निरानन्द करके गणेशको भगा दिये तथा कार्तीकेयको व्याकुल बना और चण्ड नामक प्रमथको भी चकित तथा कुण्ठित कर दिये। इस प्रकार शंकर जीके समस्त प्रमथ गणके अस्त व्यस्त हो जानेपर बलिपुत्र बाणासुरके भुज समूह रूप वनको भी काटकर जो आदि भिक्षुक श्री शंकर जीको बाणासुरकी प्राण भिक्षा देकर प्रसन्न कर दिये। वे श्रीचक्रेश श्रीसुदर्शनपुरुष आपके अमङ्गल को नष्ट करें ॥ ८७ ॥

रक्तौघाभ्यक्तमुक्ताफललुलितलसद्वीचिवृद्धौ महाब्धौ-
संध्यासंनद्धताराजलधरशबलाकाशनीकाशकान्तौ ।
गम्भीरारम्भमम्भश्चरमसुरकुलं वेदविघ्नं विनिघ्नन्
निर्विघ्नं वः प्रसूतां व्यपगतविपदं संपदं चक्रराजः ॥ ८८ ॥

अन्वयः—रक्तौघाभ्यक्तमुक्ताफललुलितलसद्वीचिवृद्धौ, सन्ध्यासम्बद्धताराजलधरशबलाकाशनीकाशकान्तौ, महाब्धौ अम्भश्चरम्, गम्भीरारम्भं वेदविघ्नमसुरकुलं विनिघ्नन्, चक्रराजः, वः व्यपगतविपदं निर्विघ्नं प्रसूताम् ॥ ८८ ॥

शत्रुओंके रक्त प्रवाहसे रंजित मोतियोंसे विशिष्ट एवं चञ्चल लहरियोंसे परिपूर्ण वह महासमुद्र, जिसकी कान्ति, सायंकालीन मेघ तथा तारागणके मिश्रित रक्त श्वेत वर्णवाले आकाश मण्डलके सदृश प्रतीत हुआ करती है। उस समुद्रके जलमें संचरण स्वभाव वाले, वेद के अपहर्ता, भयङ्कर असुर कुलको, निर्विघ्न निर्मूलन करनेवाले श्री चक्रराज सुदर्शन आपके लिये निरापद सम्पत्ति प्रदान करें ॥ ८८ ॥

काशीविप्लोषचैद्यक्षपणधरणिजध्वंससूर्याविधान-
ग्राहद्वेधात्वमगलित्रुटनमुखकथावस्तवः कीर्तिगाथाः ।
गीयन्ते किन्नरीभिः कनकगिरिगुहागेहिनीभिर्यदीया-
देयाद्दैतेयवैरी स सकलभुवनश्लाघनीयां श्रियं वः ॥ ८९ ॥

अन्वयः—काशीविप्लोषचैद्यक्षपणधरणिजध्वंससूर्यापिधानग्राहद्वेधात्व-मालित्रुटनमुखकथावस्तवः यदीयाः कीर्तिगाथाः कनकगिरिगुहागेहिनीभिः किन्नरीभिः गीयन्ते । सा दैतेयवैरी सकलभुवनश्लाघनीयां श्रियं वः दे-यात् ॥ ८९ ॥

काशी पुरीका जलाना, शिशुपालका शिरश्छेदन तथा नरकासुर वध एवं जयद्रथ वधके समय सूर्यका आच्छादन और ग्राहके शरीर का काटना, मालि राक्षसका भञ्जन आदि जिनकी विशेष कीर्ति कथाओंको सुमेरु पर्वतकी कन्दराओंमें रहनेवाली देवाङ्गनायें गाया करती हैं। वे दानव संहारकर्ता श्रीसुदर्शन पुरुष आपके लिये सकल लोक प्रशस्य सम्पत्ति प्रदान करें ॥ ८९ ॥

नानावर्णान्विवृण्वन्विरचितभुवनानुग्रहान्विग्रहान्य-
श्चक्रेष्वष्टासु मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु ।
आतारादर्णमालावधिषु वसति यः पूरुषो वः स वध्यात्-
व्यध्वैरुद्धूतसत्त्वैरुपहितमबहिर्ध्वान्तमध्वान्तवर्ती ॥ ९० ॥

अन्वयः—यः पूरुषः मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु आतारादर्ण-मालावधिषु अष्टासु चक्रेषु नानावर्णान्विरचितभुवनानुग्रहान्विवृण्वन्, अध्वान्तवर्ती सः वः, उद्धूतसत्वैर्व्यध्वैः, उपहितम् अबहिर्ध्वान्तं वध्यात् ॥ ९० ॥

जो श्री सुदर्शन पुरुष श्रेष्ठ असुरोंकी स्त्रियोंको कण्ठाभरण कस्तूरी चूर्णसे शून्य बना देते हैं। एवं प्रणवसे मातृका अक्षरपंक्ति पर्यन्त अष्टचक्रोंमें अनेक प्रकारके वर्ण वाले संसारके अनुग्रहके लिये विविध स्वरूपको प्रकट करते हुए भक्तोंके लिये निश्चित कल्याणका मार्ग प्रदर्शन करते रहते हैं। वे सुदर्शन भगवान् अवैदिक मार्गके संसर्गसे आये हुए आपके आन्तर अज्ञानको नष्ट करें ॥ ९० ॥

( अष्ट चक्रोंका स्वरूप अहिर्बुध्न्य संहितामें वर्णित है )

द्वात्रिंशत्षोडशाष्टप्रभृतिपृथुभुजस्फूर्तिभिर्मूर्तिभेदैः
कालाद्ये चक्रषट्के प्रकटितविभवः पञ्चकृत्यानुरूपम् ।
अर्थानामर्थितानामहरहरखिलं निर्विलम्बैर्विलम्बैः
कुर्वाणो भक्तवर्गं कुशलिनमवतादायुधग्रामणी र्वः ॥ ९१ ॥

अन्वयः—द्वात्रिंशत्षोडशाष्टप्रभृतिपृथुभुजस्फातिभिर्मूर्तिभेदैः, कालाद्येचक्रषटके पञ्चकृत्यानुरूपं प्रकटितविभवः अर्थितानामर्थानां निर्विलम्बैः, विलम्बैः (प्रदानैः) अखिलभक्तवर्गम् अहरहः कुशलिनं कुर्वाणः, आयुधग्रामणीर्वः अवतात् ॥ ९१ ॥

जो बत्तीस-सोलह एवं आठ, आदि मांसल भुजा वाले दिव्य स्वरूपोंसे काल-प्रकृति-पुरुष-महत् और अहंकार तथा जगत् आदि षट्-चक्रोंमें लोकके तिरोभाव-सृष्टि-स्थिति-संहार एवं अनुग्रह इन पांच रूपोंको धारण कर अपने वैभवको प्रकट करते हैं। जो प्रार्थियों को अतिशीघ्र अभीष्ट प्रदान कर सभी भक्तोंको निरन्तर सुखी रखते हैं। वे सुदर्शन पुरुष आपकी रक्षा करें ॥ ९१ ॥

कोणैरर्णैः सरोजैरपि कपिशगुणैः षड्भिरुद्भिन्नशोभे-
श्रीवाणीपूर्विकाभिर्दधति विकसतः शक्तिभिः केशवादीन् ॥
तारान्ते भूपुरादौ रथचरणगदाशार्ङ्गखड्गाङ्किताशे-
यन्त्रे तन्त्रोदिते वः स्फुरतु कृतपदं लक्ष्म लक्ष्मीसखस्य ॥ ९२ ॥

अन्वयः—षड्भिः कपिशगुणः कोणैः, अर्णैः (अक्षरैः) सरोजैः उद्भिन्नशोभे भूपुरादौ तारांते, रथचरणगदाशार्ङ्गखड्गांकिताशे, श्रीवाणीपूर्विकाभिः, शक्तिभिर्विकतः केसशवादीन् दधति। तन्त्रोदिते यन्त्रे कृतपदं, लक्ष्मीसखस्य लक्ष्म वः स्फुरतु ॥ ९२ ॥

जो पिंगल वर्णके षट्कोण, षट्अक्षर और षट्पद्मोंसे सुशोभित रहते हैं। जिसके आदिमें भूविम्ब तथा अन्तमें प्रणव विराजता है जिसकी पूर्व आदि दिशाओंमें चक्र-कौमोदकीगदा-शार्ङ्ग-

धनुष और नन्दकखड्ग अंकित रहते हैं। जो श्री, वाणी, वाक, तथा मृडानी आदि शक्तियोंसे सुशोभित होते हुए केशव आदि द्वादश व्यूह मूर्तियोंको धारण करते एवं पाञ्चरात्र आगममें कहे गये यन्त्र स्वरूपमें विराजमान रहते हैं। श्री विष्णु भगवान्के प्रधान चिह्नभूत वे श्री सुदर्शन पुरुष आपको दर्शन देनेके लिए प्रकट होवें ॥ ९२ ॥

दंष्ट्राकान्त्या कडारे कपटकिटितनोः कैटभारेरधस्ता-
दूर्ध्वे हासेन विद्धे नरहरिवपुषो मण्डले वासवीये ।
प्राक्प्रत्यक्सांध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानो-
दैतेयोत्पातशंसी रविरिव रहयत्वस्त्रराजो रुजं वः ॥ ९३ ॥

अन्वयः—पूर्वश्लोकोक्तयन्त्रस्य अधस्तात् कपटकिटितनोः (कपटवराहमूर्तेः) दंष्ट्राकान्त्याकडारे (कपिलवर्णे) ऊर्ध्वं नरहरिवपुषः, हासेन विद्धे (धवले) वासवीये मण्डले स्थितः सन् प्राक्-प्रत्यक् सान्ध्यसान्द्रच्छविभरभरिते व्योम्नि, दैतेयोत्पातशंसी रविरिव विद्योतमानः, अस्त्रराजो वः रुजं रहयतु ॥ ९३ ॥

पूर्व कथित यन्त्रका अधोभाग श्रीवराह भगवान्की दन्तकांतिके संसर्गसे पिङ्गलवर्णका है और ऊर्ध्वभाग श्रीनृसिंह भगवान्के हास्य प्रकाशसे धवल वर्णका। तथा जो इन्द्रमण्डलमें विराजते हुए प्रातः सायंकालीन सघन कांति पुञ्जसे व्याप्त आकाश मण्डलमें दैत्योंके विनाशकी सूचना देने वाले श्रीसूर्य देवके सदृश प्रकाशमान रहते हैं। वे श्री चक्रराज सुदर्शन आपके दृष्टादृष्ट प्रतिबन्धक रोगोंको विनष्ट करें ॥ ९३ ॥

कोणे क्वापि स्थितोऽपि त्रिभुवनविततश्चन्द्रधामापि रूक्षो-
रुक्मच्छायोऽपि कृष्णाकृतिरनलमयोऽप्याश्रितत्राणकारी ।
धारासारोऽपि दीप्तो दिनकररुचिरप्युल्लसत्तारकश्री-
श्चक्रेशश्चित्रभूमावितरतु विमतत्रासनं शासनं वः ॥ ९४ ॥

अन्वयः—क्वापि यन्त्रकोणे स्थितोऽपि त्रिभुवनविततः, रुक्मच्छायोऽपि कृष्णाकृतिः अनलमयोऽपि आश्रितत्राणकारी । धारासारोऽपि दीप्तः । दिनकररुचिरपि उल्लसत्तारकश्रीः । चित्रभूमा चक्रेशः वः विमतत्रासनं, शासनं वितरतु ॥ ९४ ॥

जो यन्त्रके एक कोणमें रहते हुए भी त्रिलोकमें व्याप्त हैं। स्वर्ण कांति होनेपर भी कृष्ण विग्रहवान हैं । अग्निवर्ण होने परभी भक्तरक्षक हैं । जलधारारूप होकर भी अत्यन्त प्रदीप्त रहते हैं। जो सूर्य कांति होकर भी तारक ( प्रणव ) की छवि धारणकरते हैं । इस प्रकार परस्पर विरुद्ध धर्मोंके आश्रय श्री चक्रराज सुदर्शन आपके लिए शत्रु संत्रासक शासकत्व प्रदान करें ॥ ९४ ॥

शुक्लः शक्रस्तवस्ते सह दहनकलां कालतेऽयं न कालः-
किं वो रक्षांसि रक्षा तव फलतु पते यादसां पादसेवा ।
वायो हृद्योऽसि भर्तुस्त्यज धनद मदं सेव्यतां त्र्यम्बकेति-
प्राहुर्यद्यन्त्रपालाः स दनुजविजयी हन्तु तन्द्रालुतां वः ॥ ९५ ॥

अन्वयः—हेशक्र ! तेस्तवः शुक्लः । हेदहन ! कलांसह तिष्ठ । हेकाल ! अयं ते कालो न । हेरक्षांसि ! वो रक्षा किम् । हेयादसांपते ! तव पादसेवा फलतु । हेवायो ! भर्तुः हृद्योऽसि । हेधनद ! मदं त्यज हेत्र्यम्बक ! चक्रराजः सेव्यताम् । इतियन्त्रपालाः प्राहुः । स दनुजविजयी वः तन्द्रालुतां हन्तु ॥ ९५ ॥

श्री सुदर्शन पुरुषके चरण सेवक उनके विषयमें इस प्रकार की घोषणा करते रहते हैं कि हे इन्द्र ! तुम्हारी स्तुति अति निर्मल है। अग्निदेव ! तुम श्रीचक्रराजके दर्शनके लिये, क्षणमात्र रुक जावो । हे काल ! अभी तुम्हारा समय नहीं हुआ है। हे राक्षस वृन्द ! तुम्हारी रक्षा किस काम की। वरुण देव ! तुम्हारी पाद सेवा सफल है। हे वायुदेव ! तुम तो चक्रराजके अत्यन्त प्रिय पात्र हो। कुबेर ! तुम अपने धनका दुरभिमान मत करो। त्रिलोचन ! तुम चक्रराजकी सेवा

करो। इस प्रकारके दैत्य कुल विजेता श्रीचक्रराज सुदर्शन आपके जाड्य तथा आलस्यको विनष्ट करें ॥ ९५ ॥

गायत्र्यर्णारचक्रे प्रथममनुसखस्मेरपत्रारविन्दे-
बिम्बं वह्नेस्त्रिकोणं वहति जयिजयाद्यष्टशक्तौ निषण्णा ।
शोकं वोऽशोकमूले पदसविधलसद्भीमभीमाक्षभीमा-
पुंसो दिव्यास्त्रधामा पुरुषहरिमयी मूर्तिरस्यत्वपूर्वा ॥ ९६ ॥

अन्वयः—प्रथममनुसखः स्मेरपत्रारविन्दे, वह्नेस्त्रिकोणं विम्बं वहति। जयिजयाद्यष्टशक्तौ गायत्र्यर्णारचक्रे अशोकमूले निषण्णा, पदसविभ्रलसद्भीमभीमाक्षभीमा दिव्यास्त्रधामापुरुषहरिमयी ( नरसिंहमयी ) अपूर्वा पुंसो मूर्तिः वः शोकं अस्यतु ॥ ९६ ॥

जहां पर आदि व्यूह श्रीवासुदेवके द्वादशाक्षर मंत्रके, सखारूप, प्रफुल्ल द्वादश पत्रात्मक कमलमें, अग्निके त्रिकोण बिम्ब, कर्णिका के स्थानमें विराजमान हैं। तथा जयिनी-जया-मोहिनी-ह्लादिनी-अजिता-माया-अपराजिता और सिद्धि इन आठ शक्तियोंसे जो चक्रराज सम्पन्न हैं और गायत्रीके चौबीस अक्षर जिनके अरके सदृश हैं। वहांपर अशोक वृक्षके मूल भागमें बैठकर अपने चरणके समीपस्थ भीम और भीमाक्ष संज्ञक दो भयंकर पुरुषोंसे जो अति उग्र आकार की प्रतीत होती है। श्रीचक्रराज मे विराजमान भगवानकी वह अपूर्व नृसिंह रूप मूर्ति आपके शोकको दूर फेंक दे ॥ ९६ ॥

पाश्चात्याशोकपुष्पप्रकरनिपतितैः प्राप्तरागं परागैः
संध्यारोचिः सगन्धैस्स्वपदशशधरं प्रेक्ष्य तारानुषक्तम् ।
पद्मानाबद्धकोशान्निवसुरनिवहैरञ्जलीन्कल्प्यमानां-
श्चक्राधीशोऽभिनन्दन्प्रदिशतु सदृशीमुत्तमश्लोकतां वः ॥ ९७ ॥

अन्याय:—पाश्चात्याशोकपुष्पप्रकरनिपतितैः सन्ध्यारोचिः सगन्धैः परागैः प्राप्तरागं तारानुषक्तं स्वपदशशधरं प्रेक्ष्य आवद्धकोशान् (पद्मान्) सुरनिवहैः कल्प्यमानान्, अञ्जलीन् अभिनन्दन् चक्राधीशो वः सुदृढाम्, उत्तमश्लोकतां प्रदिशतु ॥ ९७ ॥

यन्त्रके पृष्ठवर्ती अशोक वृक्षके पुष्प समूहसे गिरे हुए सायं-कालिक लालिमाके सदृश परागों द्वारा रक्तिम वर्ण हो गये एवं प्रणवसे विशिष्ट अपने निवास स्थान चन्द्र मण्डलको देखकर देव-ताओं द्वारा की गई, निवद्धपद्म कोशकी तरह प्रार्थनाञ्जलि का अभि-नन्दन करते हुए चक्राधीश पुरुष आप सबको लोकोत्तर यश प्रदान करें ॥ ९७ ॥

रक्ताशोकस्य वेदस्य च विहितपदं प्राप्तशाखस्य मूले-
चक्रैरस्त्रैस्तदाद्यैरपि महितचतुर्द्विश्चतुर्बाहुदण्डम् ।
आसीनं भासमानं स्थितमपि भयतस्त्रायतां तत्त्वमेकं-
पश्चात्पूर्वत्र भागे स्फुटतरहरितामानुषं जानुषाद्वः ॥ ९८ ॥

अन्वय:—प्राप्तशाखस्य रक्ताशोकस्य वेदस्य च मूले विहितपदं चक्रैः, तदाद्यैः अस्त्रैः, महितचतुर्द्विश्चतुर्बाहुदण्डम् पश्चात्पूर्वत्रभागे च स्फुटतरहरिता-मानुषं (नृसिंहत्वम्) आसीनं भासमानं एकं तत्वं वः जानुषात् भयतस्त्राय-ताम् ॥ ९८ ॥

अनेक शाखा प्रशाखा युक्त रक्त अशोक तथा वेदके मूल भाग एवं प्रणवमें जो निवास करने वाले हैं। जो सुदर्शन आदि चक्र तथा पाश-अंकुश प्रभृति आयुधोंको धारण करते हुए अपने चतुर्भुज तथा षोडश भुजावाले दिव्य विग्रहसे पूजित होते हैं। तथा ऊपर-नीचे के भागमें क्रमशः सिंह और मनुष्यके विशिष्ट स्वरूपमें विराजकर

प्रकाशित होनेवाले श्रीनृसिंह एवं श्रीसुदर्शन रूप इन दोनों विग्रहोंसे विशिष्ट एकतत्व स्वरूप श्री चक्राधीश भगवान् जन्म मरणके भयसे आपका परित्राण करें॥ ९८॥

प्राणे दत्तप्रयाणे मुषितदृशि दृशि त्यक्तसारे शरीरे-
मत्यां व्यामोहवत्यां सतमसि मनसि व्याहृते व्याहृते च ।
चक्रान्तर्वर्ति मृत्युप्रतिभयमुभयाकारचित्रं पवित्रं-
तेजस्तत्तिष्ठतां वस्त्रिदशकुलधनं त्रीक्षणं तीक्ष्णदंष्ट्रम् ॥ ९९ ॥

अन्वयः—प्राणे दत्तप्रयाणे दृशि मुषितदृशि शरीरे त्यक्तसारेमत्यां व्यामोहवत्यां मनसि सतमसि व्याहृते व्याहृते च । मृत्युप्रतिभयमुभयाकार-चित्रं त्रिदशकुलधनं त्रीक्षणंतीक्ष्णदंष्ट्रं चक्रान्तर्वर्ति पवित्रं तत्तेजो । वस्तिष्ठ-ताम् ॥ ९९ ॥

प्राण प्रयाणके समय जब नेत्रकी दर्शन शक्ति क्षीण हो जाती, तथा शरीर भी अत्यन्त परवश, एवं बुद्धि विभ्रान्त बन जाती है। चित्त अन्धकारमें विलीन हो जाता, और वाणी भी स्खलित होने लगती है । तब उस समय, देव समूहकी परम सम्पत्ति, तथा मृत्यु को भी भयभीत करनेवाले, त्रिनेत्र, एवं तीक्ष्ण दांतवाले श्रीनृसिंह और पुरुष, इन दोनों विग्रहोंसे विशिष्ट श्रीसुदर्शन चक्रमें सञ्चारण-शील वह दिव्य तेज आपके समक्ष अपने विशुद्ध रूपमें प्रकट हो ॥ ९९ ॥

यस्मिन्विन्यस्य भारं विजयिनि जगतां जंगमस्थावराणां-
लक्ष्मीनारायणाख्यं मिथुनमनुभवत्यत्युदारान्विहारान् ।
आरोग्यं भूतिमायुः कृतमिह बहुना यद्यदास्थापदं व-
स्तत्तन्नित्यं समस्तं दिशतु स पुरुषो दिव्यहेत्यक्षवर्ती ॥ १०० ॥

अन्वयः—लक्ष्मीनारायणाख्यं मिथुनं जङ्गमस्थावराणां जगतां भारं विजयिनि यस्मिन् विन्यस्य, अत्युदारान् विहारान्, अनुभवति । दिव्यहेत्यक्षवर्ती स पुरुषः, वः आरोग्यं भूतिम्, आयुर्दिशतु । इह बहुना कृतम् । वः, यद्यदास्थापदं तत्तत् समस्तं सद्यः दिशतु ॥ १०० ॥

श्रीलक्ष्मीनारायण भगवानका युगल विग्रह, स्थावरजंगमरूप समस्त विश्वकी, रक्षा शिक्षा आदिके समस्त भारोंको, जिन विजेता श्रीसुदर्शन पुरुषपर निर्भरकर और स्वयं निश्चिन्त हो निरतिशय आनन्द विहारका अनुभव किया करता है । सुदर्शनचक्र मध्यवर्ती वे दिव्य पुरुष आपके लिए आरोग्य ऐश्वर्य तथा आयुष्य प्रदान करें । सर्व शक्तिमान् उनके विषयमें इतना ही कहना पर्याप्त है, कि वे आपके समस्त अभीष्ट पदार्थोंको नित्यप्रति तत्क्षण प्रदान करते रहें ॥ १०० ॥

पद्यानां तत्त्वविद्याद्युमणिगिरिशविध्यंगसंख्याधराणा-
मर्चिष्वंगेषु नेम्यादिषु च परमतः पुंसि षड्विंशतेश्च ।
संघः सौदर्शनं यः पठति कृतमिदं कूरनारायणेन-
स्तोत्रं निर्विष्टभोगो भजति सपरमां चक्रसायुज्यलक्ष्मीम् ॥१०१॥

इति श्रीकूरनारायणमुनिप्रणीतं सुदर्शनशतकं समाप्तम् ॥

अन्वयः—अर्चिषु नेम्यादिषु अङ्गेषु च, तत्व, विद्या, द्युमणि-गिरिश-विध्यङ्गसंख्याधराणाम्, पद्यानाम्, अतः परं पुंसि षड्विंशतेः, संघैः कूरनारायणेन कृतं स्तोत्रं यः, पठति स निर्विष्टभोगः परमां चक्रसायुज्यलक्ष्मीं भजति ॥ १०१ ॥

इस सतकके ज्वाला वर्णनमें, चौबीस नेमिमें चौदह अरमें बारह तथा नाभिमें ग्यारह और अक्ष वर्णनमें तेरह पद्यों द्वारा एवं

इसके पश्चात पुरुष वर्णनके प्रसंगमें छब्बीस स्तुतियोंके श्लोकों द्वारा, श्री कूरनारायण मुनिसे प्रणीत इस सुदर्शन शतक नामक स्तोत्रका जोत पाठ करते हैं वे इस लोकके समस्त सुखोंके उपभोग कर लेनेके पश्चात चक्राधीश भगवान्के सायुज्य रूप मोक्ष सुखको प्राप्त करते हैं ॥ १०१ ॥

सद्धर्मामृतवर्षिणी हृदिसतां स्वानंदसंदेशिनी,
नित्यंनृत्यति यस्य वक्त्रकमलेवाणीशुभामंजुला ।
सोऽयं श्रीयुतदेवनायकमुनि र्देशेशुभे भारते,
धर्माचार्यवरोऽनिशं विजयते कल्याणकल्पद्रुमः ॥ १ ॥

शाण्डिल्यवंशकलशाम्बुधि पूर्णचन्द्रम्,
श्रीवानशैलयतिराट्पदपद्मभृङ्गम् ।
श्रीवेंकटेशचरणाम्बुजसक्तचित्तम्,
श्रीदेवनायकगुरुं शरणं प्रपद्ये ॥ २ ॥

---

